उभाभ्यां यत्र दृष्ट हि तत् पुराणेषु गीयते ।

मत्स्यपुराणे ।

पुराण सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तर च वक्त्रेभ्यो वेदास्तस्य विनिर्गता ॥
पुराणमेकमेवासीदस्मिन् कल्पान्तरेऽनघ ।
त्रिवर्गसाधन पुण्य शतकोटिप्रविस्तरम् ॥
निदग्धेषु च लोकेषु वाजिरूपेण वै मया ।
अङ्गानि चतुरो वेदा पुराणन्यायविस्तरा ॥
मीमांसा धर्मशास्त्राणि परि गृह्य समात् कृतम् ।
मत्स्यरूपेण च पुन कल्पादावुदकार्णवे ॥
अशेषमेतत् कथितमुदकान्तर्गतेन च ।
श्रुत्वा जगाद च मुनीन् प्रति वेदांश्चतुर्मुख ॥
प्रवृत्ति सर्वशास्त्राणां पुराणस्याभवत् तत ।
कालेन ग्रहण दृष्ट्वा पुराणस्य ततो नृप ॥
व्यासरूपमह कृत्वा संहरामि युगे युगे* ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ।
अद्यापि देवलोके तत् शतकोटिप्रविस्तरम् ॥
तदर्थोऽत्र† चतुर्लक्ष सङ्क्षेपेण निवेशित ‡ ।
पुराणानि दशाष्टौ च साम्प्रत तदिहोच्यते ॥
नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमा ।

* सम्वर्णामि युगे युग इति क्व चित् पाठ

† तदर्थाऽत्रेति क्व चित् पाठ ।

‡ निवेशित इति स प पु पाठ ।

वाराहपुराणे ।

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथा न्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यन्नवमं तथा ।
दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं तथा ॥
वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डमष्टादशं तथा* ॥

कालिकापुराणे ।

शैवं यद्वायुना प्रोक्तं वैरिञ्चिं वैष्णवं तथा ।
यदिदं कालिकाख्यं च मूलं भागवतं स्मृतम् ॥
सौरं च नारदीयं च मार्कण्डेयं च वह्निजम् ।
वामनं कौर्मं मात्स्यं च सप्तदशं च गारुडम् ॥
ब्रह्माण्डमष्टादशं ज्ञेयं पुराणं च न संशयः ।

सौरपुराणे ।

यदुक्तं भानुना पूर्वं पुत्राय मनवे द्विजाः ।
तदहं संप्रवक्ष्यामि शृणुध्वं वदतो मम ॥
सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
यत् तच्चोपपुराणानां खिलत्वाल्लक्षणं स्मृतम् ।
ब्राह्मं पुराणं तत्राद्यं संहिताभ्यां विभूषितम् ॥
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ।

---

* ब्रह्माण्डं च ततः परमिति क्वचित् पाठः ।

पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम् ॥
चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ।
ततो भागवतं प्रोक्तं* भागवतविभूषितम् ॥
चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनन्तरम् ।
मार्कण्डेयमथाग्नेयं नारदीयमतः परम् ॥
दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं स्मृतम् ।
भागवतेन लिङ्गं च ततो वाराहमुत्तमम् ॥
संयुक्तमष्टभिः खण्डैः स्कान्दं चैवात्र विस्तरम् ।
ततस्तु वामनं कौर्मं भागवतविराजितम् ॥
मात्स्यं च गारुडं प्रोक्तं ब्रह्माण्डं च ततः परम् ।
भागवतेन कथितं ब्रह्माण्डमभिसंज्ञितम् ॥
खिलान्युपपुराणानि यानि चोक्तानि सूरिभिः ।
इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् ॥
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ।
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ॥

कूर्मपुराणं ।

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥
तृतीयं नारदमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ।
कापिलं मानवं चैव तथैवोशनसेरितम् ॥

* ततो भागवतं चेत्यादिरिति पुस्तकान्तरे पाठः ।

ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ॥
पराशरोक्तं प्रवरं तथा भागवत* द्वयम् ।
इदमष्टादशं प्रोक्तं पुराणं कौर्मसंज्ञितम ॥
चतुर्धा संस्थितं पुण्यं संहितानां प्रभेदतः ।

मत्स्यपुराणे ।

पाद्मे पुराणे या प्रोक्ता नरसिंहोपवर्णना ।
तत्राष्टादशसाहस्रं नारसिंहमिहोच्यते ॥
नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते ।
नन्दीपुराणं तल्लोकैर्व्याख्यातमिति कीर्त्त्यते ॥
यत्र साम्बं पुरस्कृत्य भविष्यति कथानकम् ।
प्रोच्यते तत् पुनर्लोके साम्बमेव मुनिव्रताः ॥
एवमादित्यसंज्ञं च तत्रैव परिपठ्यते ।
अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदृश्यते ॥
विजानीध्व† द्विजश्रेष्ठास्तदेतेभ्यो विनिर्मितम ।
पञ्चाङ्गवत् पुराणं स्यादाख्यानमितरत् स्मृतम् ॥
सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥
ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च ।
ससंहारं प्रदृश्येत पुराणं पञ्चवर्णता ॥
धर्मश्चार्थश्च कामश्च मोक्षश्च परिकीर्त्यते ।
सर्वेष्वपि पुराणेषु तद्विरुद्धं च यत् फलम् ॥

* विनिर्गतमिति क्व चित पाठ ।

† भागवताद्वयम–इति न प्र पु पाठ ।

सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ।
सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ॥

तथा ।

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥
लक्षेणैकेन तत् प्रोक्तं वेदार्थपरिबृंहितम् ।
वाल्मीकिनाऽपि यत् प्रोक्तं* रामायणमनुत्तमम् ॥
ब्रह्मणाऽभिहितं यच्च शतकोटिप्रविस्तरम् ।
आहृत्य नारदेनैव वाल्मीकाय पुनः पुनः ॥
वाल्मीकिना च लोकेषु धर्मकामार्थसाधनम् ।
एवं सपादाः पञ्चैते लक्षास्तेषु प्रकीर्तिताः ॥

मत्स्यपुराणे ऋषय ऊचुः ।

पुराणसङ्ख्यामाचक्ष्व सूत विस्तरतः क्रमात् ।
दानधर्ममशेषं च यथावदनुपूर्वशः ॥

सूत उवाच ।

इममेव पुरा प्रश्नं नारदेन पुरुषोत्तमम् ।
यदुवाच स विश्वात्मा मुनयस्तन्निबोधत ॥
पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ।
नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमाः ॥
ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्त्यते ॥

* रामोपाख्यानमुत्तमम्-इति म॰ ख॰ पु॰ पाठः ।

लिखित्वा तच्च यो दद्याज्जलधेनुसमन्वितम् ।
वैशाख्यां पौर्णमास्यां तु ब्रह्मलोके महीयते ॥
एतदेव यदा पद्ममभूद्धैरण्मयं जगत् ।
तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः ॥
पाद्मं तत् पञ्चपञ्चाशत्सहस्राणीह पठ्यते ।
तत् पुराणं च यो दद्यात् सुवर्णकमलान्वितम् ॥
ज्यैष्ठ्ये मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत् ।
वाराहकल्पवृत्तान्तमधिकृत्य पराशरः ॥
यत्राह धर्मानखिलाँस्तद्युक्तं वैष्णवं विदुः ।
तदाषाढे च यो दद्याद्घृतधेनुसमन्वितम् ॥
पौर्णमास्यां विपूतात्मा स पदं याति वारुणम् ।
त्रयोविंशतिसाहस्रं तत् पुराणं विदुर्बुधाः ॥
श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् ॥
चतुर्विंशत्सहस्राणि पुराणं तदिहोच्यते ।
श्रावण्यां श्रावणे मासि गुडधेनुसमन्वितम् ॥
यो दद्याद्वृषसंयुक्तं ब्राह्मणाय कुटुम्बिने ।
शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः ॥
यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥
सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् ॥

अष्टादशसहस्राणि पुराणं तत् प्रकीर्त्तितम् ।
यत्राह नारदो धर्मान् बृहत्कल्पाश्रितांस्त्विह ॥
पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ।
तदिदं पञ्चदश्यां तु यो दद्याद्धेमसंयुतम् ॥
उत्तमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभम् ।
यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणम् ॥
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ।
परिलिख्य च यो दद्यात् सौवर्णकरिसंयुतम् ॥
कार्त्तिक्यां पौण्डरीकस्य यज्ञस्य फलभाग्भवेत् ।
यत् तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ॥
वशिष्ठायाग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते ।
लिखापयित्वा यो दद्याद्धेमपद्मसमन्वितम्* ॥
मार्गशीर्षे विधानेन तिलधेन्वाऽन्वितं तथा ।
एतत् षोडशसाहस्रं सर्वक्रतुफलप्रदम् ॥
यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्पतिः ॥
नवमे कथयामास भूतग्रामस्य लक्षणम् ।
चतुर्दशसहस्राणि तथा पञ्चशतानि च ॥
भविष्यच्चरितप्रायं भविष्यत् तदिहोच्यते ।
तत् पौषे मासि यो दद्यात् पौर्णमास्यां विमत्सरः ॥
गुडकुम्भसमायुक्तमग्निष्टोमफलं लभेत् ।
रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ॥
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ।

* हेमपद्मसमन्वितमिति क्वचित् पाठः ।

यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः ॥
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ।
पुराणं ब्रह्मवैवर्त्तं यो दद्यान्माघमासि च ॥
पौर्णमास्यां सभवन ब्रह्मलोके महीयते ।
यत्राग्निलिङ्गमध्यस्थः प्राह देवीं महेश्वरः ॥
धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ।
कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ॥
तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ।
तिलधेनुसमायुक्तं स याति शिवसात्मताम् ॥
महावराहस्य पुनर्माहात्म्यमधिकृत्य च ।
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तम ॥
चतुर्विंशत्सहस्राणि तत् पुराणमिहोच्यते ।
विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ॥
काञ्चनं गरुडं कृत्वा तिलधेनुसमन्वितम् ।
पौर्णमास्यां मधौ दत्त्वा ब्राह्मणाय कुटुम्बिने ॥
वराहस्य प्रसादेन* पदमाप्नोति वैष्णवम् ।
यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः ॥
कल्पे तत्पुरुषे वृत्ते चरितैरुपबृंहितम् ।
स्कान्दं नाम पुराणं तदेकाशीतिर्निगद्यते ॥
सहस्राणि शतं चैकमिति मर्त्येषु पठ्यते ।
परिलिख्य च यो दद्याद्धेमशूलसमन्वितम् ॥
शैवं च पदमाप्नोति मकरोपगमे रवेः ।
त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ॥

---

* प्रदानेनेति क्वचित् पाठः ।

त्रिवर्गमभ्यधात् तत्र वामनं परिकीर्त्तितम् ।
पुराणं दशसाहस्रं कूर्मकल्पानुगं शिवम् ॥
यच्छरद्विषुवे दद्याद्वैष्णवं यात्यसौ पदम् ।
यत्र धर्मार्थकामानां मोक्षस्य च रसातले ॥
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ।
इन्द्रद्युम्नप्रसङ्गेन ऋषीणां शक्रसन्निधौ ॥
सप्तदशसहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ।
यो दद्यादयने कुम्भं हेमकूर्मसमन्वितम् ॥
गोसहस्रप्रदानस्य स फलं प्राप्नुयान्नरः ।
श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ॥
मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् ।
अधिकृत्याब्रवीत् सप्तकल्पवृत्तं मुनिव्रताः ॥
तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ।
विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् ॥
यो दद्यात् पृथिवी तेन दत्ता भवति चाखिला ।
यदा च गारुडे कल्पे विश्वाण्डाद्गरुडोद्भवम् ॥
अधिकृत्याब्रवीत् कृष्णो गारुडं तदिहोच्यते ।
तदष्टादश चैकं च सहस्राणीह पठ्यते ॥
सौवर्णहंसमिथुनसंयुक्तं विषुवे नरः ।
यो ददाति परां सिद्धिमाप्नोति शिवसन्निधिम् ॥
ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत् पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥
भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ।
तद्ब्रह्माण्डपुराणं तु ब्रह्मणा समुदाहृतम् ॥

यो दद्याच्च व्यतीपाते पञ्चोर्णयुगसंयुतम्।
राजसूयसहस्रस्य फलमाप्नोति मानवः ॥
हेमधेन्वा युतं तच्च ब्रह्मलोकफलप्रदम्।

सौरपुराणे तदेव पुराणमधिकृत्याह।

इयं पुण्यतमा ख्याता संहिता पापनाशिनी।
वैवस्वताय मनवे कथिता रविणा पुरा ॥
दानमस्य पुराणस्य दानानामुत्तमं द्विजाः।
यो दद्याच्छिवभक्ताय ब्राह्मणाय तपस्विने ॥
यानि दानानि लोकेषु प्रसिद्धानि द्विजोत्तमाः।
सर्वेषां फलमाप्नोति चतुर्दश्यां न संशयः ॥
अन्यान्युपपुराणानि संहितान्यानि पर्वणि।
लिखित्वा यः प्रयच्छेत्तु स विद्यापारगो भवेत् ॥
शिवधर्मादिशास्त्राणि यः प्रयच्छति पुण्यधीः।
सोऽनन्तफलमाप्नोति शिवधर्मप्रकाशनात् ॥

ब्रह्मपुराणे।

धर्मार्थकाममोक्षाणां सारं भारतमुच्यते।
तदेकस्य प्रदानेन वेदशास्त्रप्रदो भवेत् ॥
रामायणं लिखित्वा तु यः समग्रं प्रयच्छति।
तस्य प्रसन्ना भवति पद्मवक्त्रा सरस्वती ॥

वह्निपुराणे।

पुराणं भारतं वाऽपि रामायणमथापि वा।
दत्त्वा यत् फलमाप्नोति न तत् सर्वैर्महामखैः ॥

कूर्मपुराणे तदेव पुराणमधिकृत्याह।

ब्राह्मी पौराणिकी चेयं संहिता पापनाशिनी।

लिखित्वेमां च यो दद्याद्देशाखे मासि सुव्रत ॥
विप्राय वेदविदुषे तस्य पुण्यं निबोधत ।
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ॥
भुक्त्वा तु विपुलान् भोगान् विद्यावान् धनवान् भवेत् ।

इति पुराणदानविधिः ।

अथ पुराणश्रवणदानम् ।

तत्र महाभारते ।

अतः परं प्रवक्ष्यामि यानि देयानि भारत ।
वाच्यमाने तु विप्रेभ्यो राजन् पर्वणि पर्वणि ॥
स्वस्तिवाच्य द्विजानादौ ततः कार्यं प्रवर्त्तते ।
समाप्ते पर्वणि ततः स्वशक्त्या तर्पयेद्द्विजान् ॥
आदौ तु वाचकं पूज्य रत्नगन्धसमन्वितम् ।
विधिवद्भोजयेद्राजन् मधुपायसमुत्तमम् ॥
ततो मूलफलप्रायं पायसं मधुसर्पिषी ।
आस्तिके भोजयेद्राजन् दद्याच्चैव गुडोदनम् ॥
अपूपैश्च पूपैश्च मोदकैश्च समन्वितम् ।
सभापर्वणि राजेन्द्र हविष्यं भोजयेद्द्विजान् ॥
आरण्यकैर्मूलफलैस्तर्पयेच्च द्विजोत्तमान् ।
आरण्यपर्वण्यासाद्य जलकुम्भान् प्रदापयेत् ॥
तर्पणानि च मुख्यानि वान्यमूलफलानि च ।
सर्वकामगुणोपेतो विप्रेभ्योऽन्नं प्रदापयेत् ॥
विराटपर्वणि तथा वासांसि विविधानि च ।
उद्योगे भरतश्रेष्ठ सर्वकामसमन्वितं ॥
भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान् ।

एवं करोति यो विद्वान् दानं पर्वप्रतिष्ठितम् ।
सर्वयज्ञफलं प्राप्य स देवैः सह मोदते ॥
यश्चानेन प्रकारेण मासं तु श्रावयन्नरः ।
तद्विद्यादानमाहात्म्याद्गोकानुद्धरति ह्यसौ ॥

इति पुराणश्रवणदानविधिः ।

अथ सर्वशास्त्रसाधारणदानविधिः ।

तत्र देवीपुराणे ।

विद्यादानं प्रवक्ष्यामि येन तुष्यन्ति मातरः ।
क्रियते दीयते येन विधिना तं शृणु प्रभो ॥

तथा ।

शृण्वतां जायते भक्तिस्ततो गुरुमुपास्यते ।
स च विद्यागमान् वक्ति विद्यायुष्टाभिता नृप ॥
श्रीताडपत्रके सङ्चे समे पत्रसुसञ्चिते ।
विचित्रकञ्चिकापार्श्वे चर्मणा सपुटीकृते ॥
रक्तेन वाऽथ कृष्णेन मृदुना गन्धितेन च ।
दृढसूत्रनिबद्धेन पर्वाग्रविकृतेन च ॥
यस्तु द्वादशसाहस्रीं संहितामुपलेखयेत् ।
ददाति चाभियुक्ताय स याति परमां गतिम् ॥
पूर्वोत्तरप्लवे देशे सर्वबाधाविवर्जिते ।
गोमयेन शुभेनैव कुर्यान्मण्डलकं बुधः ॥
धनुर्हस्तप्रमाणेन शुभं च चतुरस्रकम् ।
तस्य मध्ये लिखेत् पद्मं सितरक्तासितादिभिः ॥
सर्वसंकामजैः पुष्पैर्भूषये तृमर्वतो दिशम् ।

वितान प्रापयेन्मूर्ध्नि शुभं चित्रविचित्रितम् ॥
पार्श्वतोऽसितवस्त्रैश्च सम्यक् शोभां प्रकल्पयेत् ।
कन्दुकैरर्धचन्द्रैश्च दर्पणैश्चामरैस्तथा ॥
घण्टाकिङ्किणिशब्दैश्च सर्वतश्चोपकल्पयेत् ।
तस्य मध्ये न्यसेद्यन्त्र नागदन्तमय शुभम् ॥
अध किञ्चिन्निबद्ध तु ऊर्ध्वतोऽपि सुसंयुतम् ।
शोभित दृढबन्धेन बद्धं सूत्रेण बुद्धिमान् ॥
तस्योपरि न्यसेद्विद्वान् पुस्तक लिखित शुभम् ।
आलेख्यमपि तत्रैव पूजयेद्विधिना तत ॥
निरवद्यैस्तथा पुष्पै कृमिकीटविवर्जितै ।
चन्दनेन सकर्पूर भस्मना वाऽवधूलयेत् ॥

सकर्पूर कर्पूरसहितम ।

धूपश्च गुग्गुलुर्देयस्तुरुष्कागुरुमिश्रित ।
दीपमाला तथा चाग्रे नैवेद्य विविध पुन ॥
खाद्य पेयं सित लेह्य चोष्य वा विनिवेदयेत् ।
पूजयेच्च दिशा पालान् लोकपालान् यथाक्रमम् ॥
कन्या स्त्रियश्च सम्पूज्य मातर कल्पयेच्च वा ।
पुस्तक देवदेवीश्च विप्राणा दक्षिणा तथा ॥
दशकन्या चैव दातव्या नृप पौरांश्च पूजयेत् ।
तथा सम्पूजयेत्तस्य लेखक शास्त्रपारगम् ॥
छन्दोलक्षणतत्त्वज्ञ सत्कवि मधुरस्वरम् ।
प्रणष्ट स्मरति ग्रन्थ श्रेष्ठ पुस्तकलेखकम् ॥
नाभिमस्तातिविच्छिन्नैर्न च स्थूलैर्न कर्कशै ।
नन्दिनागरकैर्वर्णैर्लेखयेच्छिवपुस्तकम् ॥

प्रारभ्य पञ्च वै यावत् पुनः शान्तिं तु कारयेत् ।
रात्रौ जागरणं कुर्यात् सर्वप्रेक्षां प्रकल्पयेत् ॥
नटचारणनर्त्तैश्च देव्याः कथनसम्भवैः ।

सर्वप्रेक्षां सर्वप्रकारप्रेक्षणकम् ।

प्रत्यूषे पूजयन्त्येतान् सर्वान् विसर्जयेत् ।
पञ्चान्ते समनन्तरेण विशुद्धेन दिने दिने ॥
निष्पाद्य विधिनाऽनेन स्पृष्टे च शुभवासरे ।

स्पृष्टे शुभवासरे ।

ततः पूर्वोक्तविधिना पुनः पूजां प्रकल्पयेत् ।
तथा विद्यानिमानं तु समपञ्चत्रिभूमिकम् ॥
विचित्रवस्त्रशोभाढ्यं शुभलक्षणलक्षितम् ।
कारयेत् सर्वतोभद्रं किङ्किणीरवकान्वितम् ॥
दर्पणैरर्द्धचन्द्रैश्च घण्टाचामरमण्डितम् ।
तस्मिन् धूपं समुत्क्षिप्य सुगन्धचन्दनागुरुम् ॥
तुरुष्कं* गुग्गुलं वत्स शर्करामधुमिश्रितम् ।
पूजयेत् पूर्ववत् सर्वान् कन्याश्चैव जितव्रतान् ॥
तथा तत् पुस्तकं वत्स विन्यसेद्विधिपूर्वकम् ।
एवं कृत्वा यथा विद्याः प्रीयन्तां मातरो मम ॥
यस्यैव सक्तं तच्छास्त्रं तं पुस्तं परिकल्पयेत् ।

यस्यैव सक्तं यस्यैव देवस्य सक्तं सम्बन्धि। तत् पुस्तं पुस्तकं तं देवं परिकल्पयेत

मुद्रवेविशेषम् ।

तथा तपस्विनः पूज्या सर्वशास्त्रार्थपारगाः ।
शिवव्रतधरा मुख्या विष्णुधर्मपरायणाः ॥

* चतुष्कमिति क्व चित् पुस्तके पाठः ।

महता जनसङ्घेन रथस्य हस्तवाहने ।
युवभिश्चाभितो नेय यस्य देवस्य चागमम् ॥
सामान्य सर्वतीर्थेषु* मातृणां भवनेषु च ।
तस्मिन् पूजां तथा कृत्वा देवदेवस्य शूलिनः ॥
समर्पयत् प्रणम्येशं प्रीयन्तां मातरो मम ।
स्वाध्यायनयुक्ताय विद्यादानरताय च ॥
विद्यासंग्रहयुक्ताय कृतशास्त्रश्रमाय च ।
तेनैव वर्त्तते यस्तु तस्य तं विनिवेदयेत् ॥
जगद्धिताय वै शान्तिं सन्ध्याय वाचयेत् तथा ।
तेन तोयेन दातारं मूर्ध्नि सम्यक्निषेचयेत् ॥
शिवं वन्देत तं शम्भुमुपाध्यायं जगतस्तथा ।
एवं कृते महाशान्तिर्देशस्य नगरस्य च ॥
जायते नात्र सन्देहः सर्वा बाधाः शाम्यन्ति च ।
अनेन विधिना यस्तु विद्यादानं प्रयच्छति ॥
स भवेत् सर्वलोकानां वशगामघनाशनः ।
मृतोऽपि गच्छति स्थानं ब्रह्मविष्णुनमस्कृतम् ॥
सप्त पूर्वान् दशानात्मनं सर्वमेव च ।
उद्धृत्य पापकलिलाद्विष्णुलोके महीयते ॥
यावन्ति पत्रसङ्ख्यानि अक्षराणि भवन्ति हि ।
तावत् स विष्णुलोकेषु क्रीडते विविधैः सुखैः ॥
ततः क्षितिं समायातो देव्या भक्तिपरो भवेत् ।
समस्तभोगसम्पन्नो विदुषां जायते कुले ॥

* सर्वपर्व्वणि क लिखित पाठः ।

पुरतो गीतनृत्येन नानाबाद्यरवेण च ॥
मङ्गलैर्वेदनिर्घोषैर्देवाय विनिवेदयेत् ।
नानारूपोपहारैश्च सम्पूज्य तु त्रिविक्रमम् ॥
दत्त्वा च पुस्तकं तत्र पितॄणां धर्ममुद्दिशेत् ।
बान्धवानां च हृद्यानामनन्तफलमिच्छताम् ॥
ततो दत्त्वा विधानेन तां विद्यां शिवमठे वरे ।
ततश्च भक्ष्यपक्वान्नै रुद्रभक्तांश्च मानवान् ॥
यथाशक्ति च कर्तव्या उत्सवाः स्वेषु वेश्मसु ।
राज्ञा तु नगरे कार्यो ग्रामे ग्रामाधिपैस्तथा ॥
गृहे गृहस्थैः कर्तव्य उत्सवो बन्धुभिः सह ।
स्नातैः शुक्लैः समालब्धैः स्रग्विभिः सुसमाहितैः ॥
प्रीतियुक्तैस्ततः श्राव्यं शास्त्रं धर्मार्थसंहितं ।
वाचकं भक्षयेत् तत्र यथाविभवविस्तृतम् ॥
गुरुं च भक्त्या मतिमान् यथाशक्ति समाहितः ।
ततः पुष्पैश्च धूपैश्च श्रावकान् सम्प्रपूजयेत् ॥
वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः ।
अभ्यस्ताक्षरविन्यासो वृत्तशास्त्रविशारदः ॥
शब्दार्थवित् प्रगल्भश्च विनीतो मेधया युतः ।
गीतज्ञो वाक्यसुश्राव्यस्वरो नाविलभाषकः ॥
गुरुश्च धर्मवान् प्राज्ञः श्रुतशास्त्रो विमत्सरः ।
विप्रः प्रकृतिसंयुक्तः शुचिः स्मितमुखः सदा ॥
सुवृत्तो वृत्तशास्त्रज्ञः शब्दशास्त्रविशारदः * ।

* वृत्तशास्त्रविशारद इति क्वचित् पुस्तके पाठः

अथवायं जगच्छान्तिमन्त्र शान्त्युदक सृजेत् ।
सुभृत सुभृत श्रयावस्तु वाक्यान्तमित्यव ॥
लोके प्रवर्त्ततां धर्मं राजा चाऽस्तु सदा जयी ।
धर्मवान् धनसंपन्नो गुरुश्चात्र निरामय ॥
इति प्राच्य यथा जात गन्तव्य च विभाविते ।
शिष्यै परस्पर शास्त्र चिन्तनीय विचक्षणे ॥
कथावस्तुप्रसङ्गेन नानाव्याख्यानभावने ।
युक्तिभिश्च चरेद्व्याख्य विद्वैश्चापि स्वयकृते ॥
एव दिने दिने व्याख्या शृणुयान्नियतो नर ।

समस्तशास्त्रश्रवणेन पुस श्रद्धाप्रधान भवतीह चेत ॥
रागश्च शान्तात्मकमभ्युपैति दोषाश्च नाशं निमिषेण यान्ति ।
यथाकथञ्चित् शृणुयाच्च शास्त्रमश्रद्धया त्वैहिकधर्मसक्त ॥
तत समाप्ताय शास्त्रमर्थं कथोदये चापि विनीतबुद्धि ।
वाचस्पत्यार्चयेद् द्वादशाकल्पमेव गुरु च भक्त्या पितृवत् द्विजाग्र्य

एव विद्याप्रदानस्य प्रधानो विधिरुच्यते ।
अनेनैव विधानेन ब्राह्मणे शीलशालिनि ॥
प्रबोधयति यो युक्ते युक्ते वेदवादिनि ।
विन्यसेत्तु शुभ शास्त्र महापुण्यजिगीषया ॥
धनैर्वा विपुलैर्धर्मैर्गुरु कृत्वा सुतर्पितम् ।
अध्यापयेच्छुभान् शिष्यानभिजातान् सुमेधस ॥
एव विद्याप्रदान तु सर्वदानोत्तमं स्मृतम् ॥
सर्वदा सर्ववर्णानां नरकप्लवमुत्तमम् ।
अनेन विधिना दत्त्वा विद्यां पुण्यपरो नर ॥
यत् फल चाश्वमेधानां दानस्य सुकृतस्य च ।

राजसूयसहस्रस्य सम्यगिष्टस्य यत् फलम् ॥
तत् फलं लभते मर्त्यो विद्यादानेन भाग्यवान् ।
सर्वसस्यसुसम्पूर्णां सर्वरत्नोपशोभिताम् ॥
ब्राह्मणेभ्यो महीं दत्त्वा ग्रहणे चन्द्रसूर्ययोः ।
यत् फलं लभते मर्त्यो विद्यादानेन तत् फलम् ॥
यावदक्षरसङ्ख्यानं विद्यते शास्त्रसञ्चये ।
तावद्वर्षसहस्राणि स्वर्गे विद्याप्रदो भवेत् ॥
यावन्त्य पट्टयस्तत्र पुस्तकस्याक्षरान्विताः ।
यावच्च पत्रसङ्ख्यानं पुस्तके विद्यते शुभम् ॥
तावद्युगसहस्राणि सकुलो मोदते दिवि ।
तावतो नरकात् कुल्यानुद्धृत्य नयते दिवि ॥
यावच्च पातकं तेन कृतं जन्मशतैरपि ।
तत्सर्वं नश्यते तस्य विद्यादानेन दहिन ॥
स जातो मनुजो लोके स धन्यः स च कीर्त्तिमान् ।
यो विद्यादानसम्पर्कं प्रसक्तः पुरुषोत्तम ॥
यथा विभवतो दद्याद्विद्यां शाठ्यविवर्जितः ।
याति पुण्यतमांल्लोकानक्षयान् भोगभूषितान् ॥

वह्निपुराणे । अम्बरीष उवाच ।

गवां सुवर्णस्य दानं भूमिदानं तथा मुने ।
ब्रह्माण्डादीनि सर्वाणि कथितानि त्वया मम ॥
इदानीं श्रोतुमिच्छामि विद्यादानफलं महत् ।
विधिवद्विविधं तत्र कथयस्व महामुने ॥

वशिष्ठ उवाच ।

विद्यादानं प्रवक्ष्यामि यथातथ्यं महामुने ।

अज्ञान भेदपादाना दत्त विद्यापरायणे ।
भूमीगृह च क्षेत्र च स्वर्गराज्यफलप्रदम् ॥
यस्य भूम्यां स्थितो नित्य विद्यादान प्रवर्त्तयेत् ।
तस्यापि भवति स्वर्गस्तत्प्रमाणान्न सशय ॥

नन्दिपुराणे ।

येऽपि पत्र मषीपात्र लेखनीं सम्पुटादिकम् ।
सम्पुटाभियुक्ताय तेऽपि विद्याप्रदायिनाम् ॥
यान्ति लोकान् शुभान् मर्त्या पुण्यभाजो नराधिप ।

विष्णुधर्मोत्तरे ।

विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य च ।
शिल्पानि शिक्षयित्वा तु पौण्डरीकफल लभेत् ॥
शिल्पभाण्डप्रदानेऽपि तद्विद्यादानज फलम् ।
अहितेषु प्रवृत्तस्य तथा कृत्वा निवारणम् ॥
विद्यादानफल प्रोक्त नात्र कार्या विचारणा ।
पापवृत्तस्य च तथा दत्त्वा चैव परा मतिम् ॥
विद्यादानफल प्राप्य स्वर्गलोके महीयते ।
येन जीवन्ति भाण्डेन तस्मै तद्भाण्डदायक ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।

स्कन्दपुराणे ।

दरिद्र स्वानुसारेण वित्तशाठ्यविवर्जित ।
कृत्वा विधिमिम भक्त्या विद्यादानफल लभेत् ॥
यस्य पाद्ब्रशेद्वित्त स तत्पदानुसारित ।
निवेद्य सुमह भोगे शिवलोके महीयते ॥

पुस्तकास्तरणं दत्त्वा सहस्रं तत्प्रमाणतः ।
तथासनं वितानं वा शिवलोके महीयते ॥
यावत् तन्तुसूत्राणां परिसङ्ख्या समन्ततः ।
तावद्युगसहस्राणि महाभोगानवाप्नुयात् ॥
यः श्रीपर्णसमुद्भूतं निर्व्रणं सुमध्यमम् ।
दद्यात् सम्पुटकं कृत्वा चर्मणा वाऽपि निर्मितम् ॥
शिवज्ञानाभियुक्ताय तदध्ययनहेतुना ।
सुलक्षणं फलकं वाऽपि विद्यादानफलं लभेत् ॥
यः सौवर्णं सुसम्पूर्णं सर्वरत्नोपशोभितम् ।
सपिधानं सुमञ्जूषं विद्याकोशसमाश्रयम् ॥
कारयेद्वाऽपि रौप्येण ताम्रेण चतुरस्रकम् ।
कांस्यारकूटलोहं वा दारुवंशादिनिर्मितम् ॥
सुकषायानिरक्तेन चर्मणाऽभिनवेन च ।
अन्तर्बहिश्च संवेष्टयेत् विद्यादानाय पुस्तकम् ॥
सुदृढं कटकोपेतं दृढचर्मनिबन्धनम् ।
कुर्यात् तन्त्रकसंयुक्तं विद्यारत्नकरण्डकम् ॥
एवं वित्तानुसारेण कारयित्वा तु तं नृप ।
विद्यासिंहासने तत्र सम्पूज्य विधिवद्बुधः ॥
तस्मिन् पुण्याहशब्देन विद्याकोशगृहे न्यसेत् ।
एवं यः शिवविद्यायाः कुर्यादायतनं शुभम् ॥
स मुक्तः पातकैः सर्वैर्विद्यादानफलं लभेत् ।
विद्यामण्डलकं कृत्वा विद्याव्याख्यानमण्डपे ॥
तत्राभ्यर्च्य शिवं विद्यां तद्व्याख्यां शृणुयात् ततः ।
सोऽपि याति शिवस्थानं सर्वकामसमन्वितम् ॥

अङ्गान् वेदपादानां दत्त्वा विद्यापरायणे ।
भूमीगृहं च अन्नं च स्वर्गराज्यफलप्रदम् ॥
यस्य भूम्यां स्थितो नित्यं विद्यादानं प्रवर्त्तयेत् ।
तस्यापि भवति स्वर्गस्तत्प्रभावान्न संशयः ॥

नन्दिपुराणे ।

योऽपि पत्रं मषीपात्रं लेखनीं सम्पुटादिकम् ।
लघुशास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम् ॥
यान्ति लोकान् शुभान् मर्त्या पुण्यभाजो नराधिप ।

विष्णुधर्मोत्तरे ।

विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य च ।
शिल्पानि शिक्षयेद्यस्तु पौण्डरीकफलं लभेत् ॥
शिल्पभाण्डप्रदानेऽपि तद्विद्यादानजं फलम् ।
अहितेषु प्रवृत्तस्य तथा कृत्वा निवारणम् ॥
विद्यादानफलं प्रोक्तं नात्र कार्या विचारणा ।
पापवृत्तस्य च तथा दत्त्वा चैव परां मतिम् ॥
विद्यादानफलं प्राप्य स्वर्गलोके महीयते ।
येन जीवति भाण्डेन तस्मै तद्भाण्डदायकः ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।

स्कन्दपुराणे ।

दरिद्रः स्वानुसारेण वित्तशाठ्यविवर्जितः ।
कृत्वा विधिमिमं भक्त्या विद्यादानफलं लभेत् ॥
यस्य य बद्धवेदिस्तु स तस्येहानुसारितः ।
सिवेद सुमहाभोगे शिवलोके महीयते ॥

पुस्तकास्तरणं वस्त्रं सदृशं तत्प्रमाणतः ।
तथासनं वितानं वा शिवलोके महीयते ॥
यावत् तद्वस्त्रसूत्राणां परिसंख्या समन्ततः ।
तावद्युगसहस्राणि महाभोगानवाप्नुयात् ॥
यः श्रीपर्णसमुद्भूतं निम्बजातं सुसञ्चयम् ।
दद्यात् सम्पुटकं कृत्वा चर्मणा वाऽपि निर्मितम् ॥
शिवज्ञानाभियुक्ताय तदभ्ययनहेतुना ।
सुश्लक्ष्णं फलकं वाऽपि विद्यादानफलं लभेत् ॥
यः सौवर्णं सुसम्पूर्णं सर्वरत्नोपशोभितम् ।
सपिधानं सुसञ्चनं विद्याकोशसमाश्रयम् ॥
कारयेद्वाऽपि रौप्येण ताम्रेण चतुरस्रकम् ।
कांस्यारकूटलोहं वा दारुवंशादिनिर्मितम् ॥
सुकषायानिरक्तेन चर्मणाऽभिनवेन च ।
अन्तर्बहिश्च मठयेत् विद्यादानेन पूरकम् ॥
सुदृढं कटकोपेतं दृढस्तम्भनिबन्धनम् ।
कुर्यात् तालकसंयुक्तं विद्यारत्नकरण्डकम् ॥
एवं वित्तानुसारेण कारयित्वा तु तं नृप ।
विद्यासिंहासनं तत्र सम्पूज्य विधिवद्बुधः ॥
तस्मिन् पुण्याहशब्देन विद्याकोशगृहं न्यसेत् ।
एवं यः शिवविद्यायाः कुर्यादायतनं शुभम् ॥
स मुक्तः पातकैः सर्वैर्विद्यादानफलं लभेत् ।
विद्यामण्डलकं कृत्वा विद्याव्याख्यानमण्डपे ॥
तत्राभ्यर्च्य शिवं विद्यां तद्व्याख्यां शृणुयात् ततः ।
सोऽपि याति शिवस्थानं सर्वकामसमन्वितम् ॥

अनेन विधिना यस्तु शृणोति प्रवक्ति च ।
स सम्प्राप्य श्रियं सौख्यं देहान्ते मुक्तिमाप्नुयात् ॥

नन्दिपुराणे ।

इति विद्याप्रदानस्य माहात्म्यं प्रकीर्त्तितम् ।
श्रुत्वैतत् पातकैर्मुक्तः सर्वैर्नियतं सप्तजन्मजैः ॥

देवीपुराणे ।

तस्मात् सर्वप्रयत्नेन विद्या देया सदा नरैः ।
इहैव कीर्त्तिमाप्नोति मृतो याति परां गतिम् ॥
यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्त्तयेत् ।
स भवेत् सर्वलोकानां पूज्यः पूज्यपदं व्रजेत् ॥

वाराहपुराणे ।

ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ।
धर्माधर्मं न जानन्ति विद्यादानबहिष्कृताः ॥
तस्मात् सर्वप्रयत्नेन विद्यादानं* प्रयच्छति ।
चतुर्युगानि राजेन्द्र एकसप्ततिं यावता ॥
तावद्विष्णुपुरे राजन् क्रीडते कालमक्षयम् ।
क्षितिं चागत्य कालान्ते राजराजो भविष्यति ॥
त्रेतायुगे धर्मपरो जायते च पुनः पुनः ।
कुले महति जातश्च स राजा धार्म्मिको भवेत् ॥
हस्त्यश्वरथयानानां दाता भोक्ता विमत्सरी ।
भोक्ता पुरवराणां च देशानां चैव कोटिशः ॥
रूपसौभाग्यसम्पन्नो दीर्घायुर्नीरुजो भवेत् ।

* प्रवर्त्तते इति क्वचित् पाठः ।

पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् ॥
लेखकं दक्षिणां दद्याद्वस्त्रालङ्कारभूषणम् ।
शुक्लं च वस्त्रयुग्मं च दद्याच्छास्त्रसमन्वितम् ॥
लिखापयित्वा तच्छास्त्रं देयं गुणवते सदा ।
तपस्विने धर्मरते परिपालनतत्परे ॥
वस्त्रयुग्मेन सहितं पुस्तकं प्रतिपादयेत् ।
वाचकं पूजयच्चैव वस्त्रालङ्कारभूषणैः ॥
श्रूयतामिति वक्तव्यं लेखकं सुसमाहितः ।
अनेनैव विधानेन विद्यादानात् फलं लभेत् ॥

वह्निपुराणे ।

वाजपेयसहस्रस्य सम्यगिष्टस्य यत् फलम् ।
तत् फलं समवाप्नोति विद्यादानान्न संशयः ॥
तस्माद्देवालये नित्यं धर्मशास्त्रस्य वा श्रुतम् ।
पठनं कारयन् ब्राह्मन् यदीच्छेद्धर्ममात्मनः ॥
गोभूहिरण्यवासांसि शयनान्यासनानि च ।
प्रत्यहं तेन दत्तानि भवन्ति नृपसत्तम ॥
धर्माधर्मं न जानाति लोकोऽयं विद्यया विना ।
तस्मात् सदैव धर्मात्मन् विद्यादानरतो भवेत् ॥
वेदशास्त्रे रहस्यानां यदि नैव नृपोत्तम ।
ततो ज्ञानतमोऽन्धस्य काऽवस्था जगतो भवेत् ॥
ब्रह्माद्या सुराः सर्वे ऋषयो दग्धकिल्बिषाः ।
मनुष्याः पितरश्चैव विद्यादाने प्रतिष्ठिताः ॥
चतुर्गुणानां राजेन्द्र चक्रसप्ततिसङ्ख्यया ।
वेदशास्त्रप्रदः स्वर्गे पूज्यते सुरसत्तम ॥

अथ दश महादानान्युच्यन्ते ।

तत् तादृग्विमलं कुलं निरवधिर्विद्याऽनवद्याऽऽकृतिः

सम्पत्कम्पितदैन्यसैन्यनिवहा माधुर्यधुर्या गिरः ।

इत्यन्यान्यजिगीषयेव गुरुता यस्मिन् भजन्ते गुणा

स्तेनायं विधिरुच्यते दशमहादानेषु हेमाद्रिणा ॥

तत्स्वरूपश्लोकास्तु कूर्मपुराणे ।

कनकं च तिला नागा दासी रथमहीगृहाः ।

कन्या च कपिला धेनुर्महादानानि वै दश ॥

तत्र प्रथमनिर्दिष्टतया सुवर्णदानमेव तावदुच्यते

ब्रह्मपुराणे । राम उवाच ।

कामार्थिना मया कर्म कृतं मुनिवरोत्तमाः ।

कथं तस्माद्विमुच्येऽहं पापात् प्राणिवधादिकात् ॥

इत्युक्ता धर्मतत्त्वज्ञाः पापानां पावनं परम् ।

दानं चेह सुवर्णस्य ते तमूचुर्महर्षयः ॥

एतत् पवित्रमतुलं सम्भूतमिह शुभम् ।

शम्भोर्बीजं परं तेजो ह्यपत्यं जातवेदसः ॥

महच्च कार्त्तिकेयस्य रुद्रशुक्रसमुद्भवम् ।

पवित्रत्वात् सुरैः सर्वैर्धार्यते मुकुटादिषु ॥

अग्निस्तु देवताः सर्वाः सुवर्णं च तदात्मकम् ।

तस्मात् सुवर्णं ददता प्रीताः स्युः सर्वदेवताः ॥

दश पूर्वान् परांश्चैव नरकात् तारयन्ति ते ।

सुवर्णं ये प्रयच्छन्ति प्रोवाचेदं बृहस्पतिः ॥
सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम्
मरीचिर्भगवान् पूर्वं पितामहसुतोऽब्रवीत् ॥
यः सुवर्णं नरो नित्यं ब्राह्मणेभ्यः प्रयच्छति ।
स चिरं विरजा विद्वान् वंशवर्ग्यैर्दिवि मोदते ॥
सर्वासामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥
विद्यादानं सुवर्णं तु यो लाभाच्च प्रयच्छति ।
स सीदति च पापेन वेष्टितो नरकं व्रजन् ॥
कृत्वाऽपि सुमहत् पापं जातरूपं ददाति यः ।
स सद्यस्तेन पापेन मुच्यते नात्र संशयः ॥
एतत् कृत्वा तु शुद्ध्यर्थं सुवर्णं देहि भार्गव ।
इत्युक्तो मुनिभिस्तैस्तु रामो धर्मभृतां वरः ॥
प्रादात् सुवर्णं विप्रेभ्यस्ततः पापाद्विमुच्यत ।
तस्मात् त्वमपि राजेन्द्र द्विजेभ्यो देहि काञ्चनम् ॥
विरजस्कतां समुद्दिश्य यदीच्छेच्छाश्वतीं गतिम् ।

## ब्रह्माण्डपुराणे ।

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
पवित्राणां पवित्रं च दानानां नात्र संशयः ॥
हिमवद्दुहिता पूर्वमुमा नाम पतिव्रता ।
पूर्वजन्मनि सा चासीद्दक्षस्य तनया सती ॥
दक्षकोपाच्च तत्याज सती चात्मकलेवरम् ।
हिमवद्दुहिता जज्ञे लोके गौरीति विश्रुता ॥
दत्ता तेनापि सा तस्मै प्रणिपत्य पिनाकिने ।

विवाहं कारयामास विधिवद्दुहितुस्तदा ॥
वैवाहिकेन विधिना जुहावाग्निं पितामह ।
होमं च कुर्वतस्तस्य विकारो मन्मथोऽभवत् ॥
रूपं दृष्ट्वा तदा देव्या रेतः स्रुतं महात्मनः ।
पद्मया च भृवितं तेन वसुधा समपद्यत ॥
तत्र रम्या महात्मानो वालखिल्या मरीचयः ।
जातौ च शोभमपतत्यथाभूद्वाऽनलप्रभम् ॥
आज्वल्यमानं दीप्तया च अग्निमध्यगतं तथा ।
प्रशशंसिरे ततो देवा दृष्ट्वा पुत्रं विभावसोः ॥
जगृहुः शिरसा चैव पुण्यत्वात् ते पुटाञ्जलिः ।
ऊचुश्च देवगन्धर्वा मुनयश्च यतव्रताः ॥
विभूषणं च ते देवा हाटकं विभावसोः ।
देवरत्न्यस्तथा चैतद्भूषणेषु न्ययोजयन् ॥
एवं सुवर्णमुत्पन्नमाग्नेयं ब्राह्ममेव च ।
पवित्रमपरं लोके सुवर्णेन समं क्वचित् ॥
न विद्यते ग्रुव्यजातं दानं वा भूषणं तथा ।

अत्राह बृहस्पतिः ।

गृहादिके पुण्यफलं भवेन्मूल्यानुसारतः ।
तस्मात् सर्वप्रदानानां हिरण्यमधिकं स्मृतम् ॥
यथा शान्तिकादीनां हेम्ना सम्पद्यते क्रिया ।
तथा न गृहदानेन हिरण्यमधिकं ततः ॥

वेदव्यासः ।

सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।
एतद्धि भगवानत्रिः पितामहसुतोऽब्रवीत् ॥

पवित्रमथ वा पुण्यं पितॄणामक्षयं च यत् ।
सुवर्णं मनुजेन्द्रेण मनुना समुदाहृतम् ॥

मनुः ।

भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ।

संवर्त्तः ।

हिरण्यदो महाबुद्धिः दीर्घमायुश्च विन्दति ।

विष्णुः ।

सुवर्णप्रदोऽग्निसालोक्यमाप्नोति ।

बृहस्पतिः ।

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात्

विश्वामित्रः ।

यत्राग्ने लिखिता गेहे स्वर्णदानस्य संस्तुतिः ।
रक्षोभूतपिशाचाद्यास्तं न पश्यन्ति पार्थिव ॥

देवीपुराणे ।

शक्त्या मानं सुवर्णादि पात्रेषु प्रतिपादयेत् ।
कामानिष्टानवाप्नोति विधिश्रद्धासमन्वितः ॥

वसिष्ठः ।

तस्मादग्निमुखाः सर्वदेवता इति शुश्रुम ।
ब्राह्मणो हि प्रसूतोऽग्निरग्नेरपि च काञ्चनम् ॥
तस्माद्ये वै प्रयच्छन्ति हिरण्यं सर्वदैवतम् ।
तस्य वै वेधसो लोका गच्छन्ति परमां गतिम् ॥
स्वर्लोके राजराज्येन सोऽभिषिच्येत भार्गव ।

सुवर्णमित्यनुवृत्तौ कालिकापुराणे ।

पूतमेतत् द्विज पुण्यं पुरा कार्येषु निर्जराः ।
धारयन्ति यतः सर्वे मङ्गलार्थमरोगतः ॥
अतः पापानि सर्वाणि पात्रेभ्यो विधिपूर्वकम् ।
दत्तं पुनाति काले च देशे च हरसन्निधौ ॥
श्रूयते येन रामेण विधिना प्राक् तपोधन ।
प्रदत्तं काञ्चनं पूर्वं त्रैलोक्येन महात्मना ॥
सर्वहेममयं यज्ञमिष्ट्वा विप्राः प्रतर्पिताः
हेमैराभरणैः पूज्य दत्तं फलशतं तथा ॥
भूयः पत्र तुला तेन स्वयमारोप्य यत्नतः ।
हेमद्वितीयपार्श्वे च द्विजातिभ्यो ददौ स्वयम् ॥
भूयोऽपि तन्मयान्येव सूर्यपात्राणि तेन च ।
प्रभासादिषु तीर्थेषु ब्राह्मणेभ्यो ददौ तथा ॥
गत्वा च ब्राह्मणानां विप्र कृत्वा पृथक् पृथक् ।
सहस्रं च सहस्रं च सवत्सानां सुवर्णिनाम् ॥
बद्ध्वा कम्बलमाक्रम्य पलान्येकादशैव तु ।
एकैकस्य पृथक्त्वेन दत्तं हेम तु तेन वै ॥
कारयित्वा सपद्मानि जातरूपमयानि च ।
भ्रमता तीर्थकिञ्जाना मूर्ध्नि दत्तानि तेन वै ॥
तन्मयाभरणैः पूज्य ब्राह्मणोऽथ सहस्रशः ।
सम्पूज्य तर्पिता विप्रा भूयस्तेनैव मानद ॥
पताकैश्च पताकाश्च मालाश्चैव द्विजातये ।
[illegible] सिबुकाश्च कारयित्वा गृहे गृहे ॥
उपवीतं च यष्टिश्च मेखलापादुके तथा ।

लेखनीं च मषीपात्रं दत्त्वा विप्रेषु तेन वै ॥
भानुलोपस्करं कृत्स्नमासनं भाजनन्त्वथम् ।
द्विजेभ्यश्चैव दत्तानि कारयित्वा स्वशक्तितः ॥
ग्रहाणां देवतानां च कृत्वा रूपाणि भूरिशः ।
न्यस्तानि विधिवत् पूज्य द्विजानां चैव मन्दिरे ॥
काञ्चनीं रौप्यमीं स्पृष्ट्वा मणीवर्धिसमन्विताम् ।
पुष्पैर्धूपैश्च नैवेद्यैर्युक्ता दत्तौ विप्रेभ्य एव स ॥
एवमाद्यैरनेकैश्च प्रकारैः कनकं पुरा ।
पापापनुत्तये दत्त्वा पापमासाद्य भूपम ॥

श्रीमहाभारते ।

पितामहामर्षादिनुपश्रुत्वा प्रकृत्यर्पितमुक्तो ऽवरेण्यजय युधिष्ठिर इति भीष्मवाक्यानि

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥
तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
तदिदं सम्यगारब्धं त्वयाद्य भरतर्षभ ॥
किन्तु भूमिर्गवां चार्थे सुवर्णं दीयतामिति ।
एवं वयं च धर्मज्ञ सर्वं चास्मत्पितामहाः ॥
तारिता वै तरिष्यन्ति पावनं परमं हि तत् ।
दश पूर्वान् दशान्यांस्तथा तान् तारयन्ति ते ॥
सुवर्णं ये प्रयच्छन्तीत्येवं मा पितरोऽब्रुवन् ।

राम प्रति वसिष्ठवाक्यानि ।

सर्वरत्नानि निर्मथ्य तेजोराशिसमन्वितम् ।
सुवर्णमेभ्यो विप्रेन्द्र रत्नं परममुत्तमम् ॥
एतस्मात् कारणाद्देवा गन्धर्वोरगराक्षसाः ।

मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत् ॥
मुकुटैरङ्गदयुतैरलङ्कारैः पृथग्विधैः ।
सुवर्णविधृतैरत्र विराजन्ते भृगूत्तम ॥
तस्मात् सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम् ।
पृथिवीं गाश्च दत्त्वाऽह तथाऽन्यदपि किञ्चन ॥
विशिष्यते सुवर्णस्य दानं परमकं विभो ।
अक्षयं पावनं चैव सुवर्णमनुराजते ॥
प्रयच्छ द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ।
सुवर्णमेव सर्वत्र दक्षिणासु विधीयते ॥
सुवर्णं ये प्रयच्छन्ति सर्वदास्ते भवन्त्युत ।

नन्दिपुराणे ।

कृष्णला पञ्च माषास्तु माषैः षोडशभिः स्मृतम् ।
सुवर्णमेकं तद्दानाद्दाता स्वर्गमवाप्नुयात् ॥

तथा ।

तस्मात् स सर्वथा पात्रे दद्यात् कनकदक्षिणाम् ।
अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे ॥
प्रमादतस्तु तद्दत्तं तावन्मात्रं निवेशयेत् ।
अन्यथा स्तेययुक्तः स्यादेवम्यद्दत्ते विनाशिनि ॥
दानार्थमेव तत् सृष्टं ब्रह्मणा स्वर्गसाधनम् ।
दानात् परं सुवर्णस्य विधिरेव न विद्यते ॥
सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
एतत् पवित्रं परममेतत् स्वस्त्ययनं महत् ॥
दश पूर्वान् परान् वंश्यानात्मानं च विशां पते ।
अपि पापशतं कृत्वा दत्त्वा विप्रेषु तारयेत् ॥

लेखनीं च मषीपात्रं दत्त्वा विप्रेषु तेन वै ॥
आनुलोमपत्रकं कृत्वा मासं मासनतन्मयम् ।
द्विजेभ्यश्चैव दत्तानि कारयित्वा सहस्रशः ॥
ग्रहाणां देवतानां च कृत्वा रूपाणि भूरिशः ।
स्थापितानि विधिवत् पूज्य द्विजानां चैव मन्दिरे ॥
काञ्चनीं रौप्यमीं स्पृष्ट्वा गोदधिसमन्वितम् ।
पुष्पैर्धूपैश्च युक्ता दत्तौ विप्रेभ्य एव स ॥
एवमाद्यैरनेकैश्च प्रकारैः कनकं पुरा ।
पापापनुत्तये दत्तं पापमासाद्य भूपतः ॥

## श्रीमहाभारते ।

पितामहभीष्मं प्रति युधिष्ठिरप्रश्ने भीष्मवाक्यानि

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिष्टं भूमिर्गावोऽथ काञ्चनम् ॥
तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
तदिदं सम्यगारब्धं त्वयाऽद्य भरतर्षभ ॥
किन्तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ।
एवं वयं च धर्मज्ञ सर्वे चात्मनृपितामहाः ॥
तारिता वै तरिष्यन्ति पावनं परमं हि तत् ।
दश पूर्वान् दशान्यांस्तथा तान् तारयन्ति ते ॥
सुवर्णं ये प्रयच्छन्तीत्येवं मा पितरोऽब्रुवन् ।

## रामं प्रति वसिष्ठवाक्यानि ।

सर्वरत्नानि निर्मथ्य तेजोराशिसमन्वितम् ।
सुवर्णमेभ्यो विप्रेन्द्र रत्नं परममुत्तमम् ॥
एतस्मात् कारणाद्देवा गन्धर्वोरगराक्षसाः ।

मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत् ॥
मुकुटैरङ्गदयुतैरलङ्कारैः पृथग्विधैः ।
सुवर्णविधृतैरत्र विराजन्ते भृगूत्तम ॥
तस्मात् सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम् ।
पृथिवीं गा च दत्त्वाऽह तथाऽन्यदपि किञ्चन ॥
विशिष्यते सुवर्णस्य दानं परमकं विभो ।
अक्षयं पावनं चैव सुवर्णमनुराजते ॥
प्रयच्छ द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ।
सुवर्णमेव सर्वत्र दक्षिणासु विधीयते ॥
सुवर्णं ये प्रयच्छन्ति सर्वदास्ते भवन्त्युत ।

नन्दिपुराणे ।

कृष्णलाः पञ्च माषास्तु माषैः षोडशभिः स्मृतम् ।
सुवर्णमेकं तद्दानाद्दाता स्वर्गमवाप्नुयात् ॥

तथा ।

तस्मात् स सर्वथा पात्रे दद्यात् कनकदक्षिणाम् ।
अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे ॥
प्रमादतस्तु तद्दद्यात् तावन्मात्रं नियोजयेत् ।
अन्यथा स्तेययुक्तः स्याद्देयन्यदत्तं विमाशिनि ॥
दानार्थमेव तत् सृष्टं ब्रह्मिष्टं स्वर्गसाधनम् ।
दानात् परं सुवर्णस्य विशिष्टेव न विद्यते ॥
सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
एतत् पवित्रं परममेतत् स्वस्त्ययनं महत् ॥
दश पूर्वान् परान् वंश्यानात्मानं च विशांपते ।
अपि पापशतं कृत्वा दत्त्वा विप्रेषु तारयेत् ॥

दत्त्वैवं कपिलां विप्राः प्राप्नोत्यभ्यधिकं फ

**महाभारते ।**

तिस्रो गावीस्त्वद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेः
वत्सैः पीताः सुप्रजाः सोपचारास्त्र्यहं दत्त्वा गोर

**तथा ।**

द्विजातिमभिसत्कृत्य श्वःकल्यमुपवेश्य च
प्रदानार्थे नियुञ्जीत रोहिणीं नियतव्रतः ॥

'श्वःकल्यमुपवेश्य' प्रातःकाल उपस्थानं कर्त्तव्यमिति तात्पर्यं

आह्वानं च प्रयुञ्जीत समङ्गे बहुले इति ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत्

गौर्मे माता वृषभश्च पिता मे दिवं शर्म मे प्रति
प्रपद्येकां सर्वरीं मुख्यगोषु मुनिर्वाणीमुत्सृजे गोः

समतामेति वै गोभिः समस्त्यः समव्रत
पकाकल्पगमनात् सद्यः कल्मषाद्विप्रमुच्यते
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।

[illegible] वृषवत्सा यथा सा तथा ।

ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञे गर्भो अमृतस्य [illegible]
क्षक संप्रवाहाः पुण्यभावाः प्राजापत्याः सर्वमित्
[illegible]. ममैनः प्रणुदन्तु सौर्यस्तथा सौम्याः स्वर्गाय
आहुता मे ददतश्चाश्रयन्तु तथा मुक्ताः सन्तु सर्वे
शं [illegible] कर्मभिर्देहमोक्षे सरस्वत्यः श्रेयसि संप्र
गूयं नित्यं पुण्यकर्मोपवत्यः दिशध्वं मे गतिमिष्टां
या वै यूयं सोऽहमाद्यैकभावो युष्मान् दत्त्वा [illegible]
नमस्कृता [illegible] संरक्षध्वं सौम्य[illegible]

दत्त्वैवं कपिलां विप्राः प्राप्नोत्यभ्यधिकं फल

महाभारते ।

तिस्रो गावीस्त्वद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेभ्यः

वत्सैः पीताः सुप्रजाः सोपचारास्त्र्यहं दत्त्वा गोरस

तथा ।

द्विजातिमभिसत्कृत्य श्वःकल्यमुपवेश्य च ।
प्रदानार्थं नियुञ्जीत रोहिणीं नियतव्रतः ॥

श्वःकल्यमुपवेश्य प्रातःकाले उपस्थानं करिष्यामीति ज्ञापयि

आह्वानं च प्रयुञ्जीत समङ्गे बहुले इति ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ।

गौर्मे माता वृषभश्च पिता मे दिवं शर्म मे प्रतिष्ठा

प्रपद्यैवं शर्वरीं मुख्यगोषु मुनिर्वाणीमुत्सृजे गोप्रद

समतामेति वै गोभिः समसङ्ख्यः समव्रतः ।
एकाल्पगमनात् सद्यः कल्मषाद्विप्रमुच्यते ॥

उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।

उत्सृष्टो त्यक्तो वृषवत्सो यया सा तथा ।

ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञो गर्भो अमृतस्य प्रतिष्ठा
ऋक्क् संप्रवाहाः पुण्यभावाः प्राजापत्याः सर्वमित्यर्थवा
गावो ममैनः प्रणुदन्तु सौर्यास्तथा सौम्याः स्वर्गयानाय
आहूता मे ददतश्चाश्रयन्तु तथा मुक्ताः सन्तु सर्वाशि
शेषोत्सर्गे कर्मभिर्देहमोक्षे सरस्वत्यः श्रेयसि संप्रवृत्त
यूयं नित्यं पुण्यकर्मोपवाह्यः दिशध्वं मे गतिमिष्टां प्रप
या वै यूयं सोऽहमद्यैकभावो युष्मान् दत्त्वा चाहमात्म
नमस्कृता मम पर्वोपपन्नाः संरक्षध्वं सौम्यरूपेऽग्रत्याः

वह्निरूपपतिः शम्भुर्वह्निरूपी तिलाश्रयः ॥
तेजोरूपकृतं पापं चाक्षुषं च व्यपोहतु ।
इति दत्तेऽस्य नश्यन्ति पापान्यग्निकृतानि च ॥
पाकहोमेषु काष्ठेषु हिंस्यन्ते यानि वह्निना ।
अङ्गारवनदाहादिसम्भवानि च यानि वै ॥
विरुद्धकरणोत्थानि रूपयोगोद्भवानि च ।
परदारपरद्रव्यपुत्रदर्शनजानि च ॥
शवादिदर्शनोत्थानि नेत्रदोषकृतानि च ।
य एवं कुरुते दानं शिवभक्त्या यतव्रतः ॥
शिवलोके वसेद्भूप कल्पत्रयमशङ्कितः ।

इति तिलकरकदानविधिः

## वायुपुराणे ।

अतः परमहङ्कारं नाम दानं वदामि ते ।
पूर्ववत् कल्पिते पीठे तिलानामुपरि न्यसेत् ।
राजन् मण्डलं शुद्धं विंशत्यङ्गुलायतम् ।
तत्र देवमहङ्कारं पविशक्तिधराकृतिम् ॥
विन्यस्य राजतानन्यान् कुमारान् परितो न्यसेत् ।
नैगमेशं विशाखं च कुमारं गुहमेव च ॥

पूर्ववदिति तिलपीठदानवदित्यर्थः । 'पविः' वज्रम् । अहङ्कारश्च पुरुषाकृ-
तिर्द्विभुजो वज्रशक्तिधरो विधेयः ।

## नैगमेशादिलक्षणमुक्तं विश्वकर्मणा ।

ततः स्कन्दग्रहा जाता दारुणा विकृताननाः ।
नैगमेशमुखाः शक्तिधरा द्विबाहवस्तथा—इति ॥
कौसुम्भे वाससी दद्याद्घण्टां च परितो न्यसेत् ।

कुङ्कुमं गन्धकार्ये स्यात् पुष्पं च करवीरजम् ॥
अहङ्कारपते देव गुहरूप दुरन्तक ।
अभिमानकृताद् पापात् सर्वस्मात् पाहि मां प्रभो ॥
इति दत्तेऽस्य नश्यन्ति यान्यहङ्कारजानि तु ।
पारुष्यस्त्रीनिषेव्यादिविप्रक्षत्रियजानि च ॥
तानि सर्वाणि नश्यन्ति यानि कृत्यविलङ्घनैः ।
अनात्मन्यात्मबुद्ध्या तु गृहक्षेत्रादिसम्भवैः ॥
अन्यानि यानि पापानि तानि नश्यन्ति सर्वतः ।
पापानि तानि नश्यन्ति शिवलोके वसेन्नरः ॥
कल्पानां शतमेकं च नात्र कार्या विचारणा ।

इत्यहङ्कारदानविधिः ।

## ब्रह्माण्डपुराणे ।

अतः परं प्रवक्ष्यामि तिलदानमनुत्तमम् ।
यद्दत्वा पुरुषः स्त्री वा वैरिञ्चिं लोकमाप्नुयात् ।
आयुरारोग्यदं पुण्यं सर्वपापप्रणाशनम् ।
शिवप्रीतिकरं नृणां पुत्रवृद्धिकरं शुभम् ॥
रुद्रैकादशबुद्ध्या तु विप्रानेकादशान् सुधीः ।
प्राङ्मुखः प्रत्यगासीनान् गन्धादिभिरथार्चयेत् ।
तिलप्रस्थद्वयं पात्रे प्रत्येकं निक्षिपेत् तथा ।
प्रत्येकं मण्डलं हैमं पात्रेषु विनिवेदयेत् ॥
पात्राणि चैवमाराध्य शिवबुद्ध्या यथाक्रमम् ।
रुद्रैकादशमन्त्रैश्च दद्यादुदकपूर्वकम् ॥

रुद्रैकादशमन्त्रा वक्ष्यमाणनामभिर्मन्त्रैर्ज्ञातव्याः ।

मृगव्याधश्च सर्वश्च नैर्ऋतिश्च महायशाः ।

वह्निरूपपतिः शम्भुर्वह्निरूपी तिलाश्रयः ॥
तेजोरूपकृतं पापं चाक्षुषं च व्यपोहतु ।
इति दत्तेऽस्य नश्यन्ति पापान्यग्निकृतानि च ॥
पाकहोमेषु काष्ठेषु हिंस्यन्ते यानि वह्निना ।
अङ्गारवनदाहादिसम्भवानि च यानि वै ॥
विरुद्धकरणोत्थानि रूपयोगोद्भवानि च ।
परदारपरद्रव्यपुत्रदर्शनजानि च ॥
शवादिदर्शनोत्थानि नेत्रदोषकृतानि च ।
य एवं कुरुते दानं शिवभक्त्या यतव्रतः ॥
शिवलोके वसेद्भूप कल्पत्रयमशङ्कितः ।

इति तिलकरकदानविधिः

## वायुपुराणे ।

अतः परमहङ्कारं नाम दानं वदामि ते ।
पूर्ववत् कल्पिते पीठे तिलानामुपरि न्यसेत् ।
राजतं मण्डलं शुद्धं विंशत्यङ्गुलायतम् ।
तत्र देवमहङ्कारं पविशक्तिधराकृतिम् ॥
विन्यस्य राजतानन्यान् कुमारान् परितो न्यसेत्
नैगमेशं विशाखं च कुमारं गुहमेव च ॥

पूर्ववदिति तिलपीठदानवदित्यर्थः । 'पवि' वज्रम् । अहङ्कारश्च पुरुषाकृतिर्द्विभुजो वज्रशक्तिधरो विधेयः

## नैगमेशादिलक्षणमुक्तं विश्वकर्मणा ।

ततः स्कन्दग्रहा जाता दारुणा विकृताननाः ।
नैगमेशमुखाः शक्तिधरा द्विबाहवस्तथा–इति ॥
कौसुम्भे वाससी दद्याद्घण्टां च परितो न्यसेत् ।

कुङ्कुमं गन्धकार्ये स्यात् पुष्पं च करवीरजम् ॥
अहङ्कारपते देव गृहरूप दुरन्तक ।
अभिमानकृताहं पाप सर्वस्मात् पाहि मां प्रभो ॥
इति दत्तेऽस्य नश्यन्ति यान्यहङ्कारजानि तु ।
पारुष्यस्त्रीनिषेध्यादिविप्रक्षत्रियजानि च ॥
तानि सर्वाणि नश्यन्ति यानि कृत्यविलङ्घनैः ।
अनात्मन्यात्मबुद्ध्या तु गृहक्षेत्रादिसम्भवैः ॥
अन्यानि यानि पापानि तानि नश्यन्ति सर्वतः ।
पापानि तानि नश्यन्ति शिवलोके वसेन्नरः ॥
कल्पानां शतमेकं च नात्र कार्या विचारणा ।

इत्यहङ्कारदानविधिः

## ब्रह्माण्डपुराणे ।

अतः परं प्रवक्ष्यामि तिलदानमनुत्तमम् ।
यद्दत्त्वा पुरुषः स्त्री वा शैवं च लोकमाप्नुयात् ।
आयुरारोग्यदं पुण्यं सर्वपापप्रणाशनम् ।
शिवप्रीतिकरं नृणां पुत्रवृद्धिकरं शुभम् ॥
रुद्रैकादशबुद्ध्या तु विप्रानेकादशान् सुधीः ।
प्राङ्मुखः प्रत्यगासीनान् गन्धादिभिरथार्चयेत् ॥
तिलप्रस्थद्वयं पात्रे प्रत्येकं निक्षिपेत् तथा ।
प्रत्येकं मण्डलं हैमं पात्रेषु विनिवेदयेत् ॥
पात्राणि चैवमाराध्य शिवबुद्ध्या यथाक्रमम् ।
रुद्रैकादशमन्त्रैश्च दद्यादुदकपूर्वकम् ॥

रुद्रैकादशमन्त्रा वक्ष्यमाणनामभिनमोऽन्तैर्ज्ञातव्याः ।

मृगव्याधश्च सर्वश्च नैर्ऋतिश्च महायशाः ।

